[illegible]

॥ श्री. ॥

# संकर्ष-काण्डम् ।

जैमिनीयषोडशाध्याय्याः शेषचतुरध्यायीस्वरूपम् ।

मीमांसापारदृश्वबुधवरश्रीभास्करभट्टप्रणीतभाट्टचन्द्रिकोपेतम् ।

तत्सम्प्रदायाचार्य प. स्वामिश्रीराममिश्रशास्त्रिसङ्कलितटिप्पणीसमेतम्

# SAMKARSHA KÁNDA

OR

THE LAST FOUR CHAPTERS OF JAIMINI

WITH THE COMMENTARY CALLED BHÁTTA CHANDRIKÁ

OF BHÁSKARA

EDITED WITH NOTES

BY

PANDIT SWAMI RAMA MISRA SASTRI



वाराणस्याम् ।

मुद्रयित्वा प्रकाशितम् ।

…PRINT FROM THE PANDIT.

॥ श्रीः ॥

# संकर्ष–काण्डम् ।

नीयषोडशाध्याय्याः शेषचतुरध्यायीस्वरूपम् ।

सापारद्रुखबुधधरश्रीभास्करभट्टप्रणीतभाट्टचन्द्रिकोपेतम् ।

द्यायाचार्य पं॰ स्वामिश्रीराममिश्रशास्त्रि संकलिततटिप्पणीसमेतम् ।

# SAMKARSHA KĀṆḌA

OR

## THE LAST FOUR CHAPTERS OF JAIMINI,

ITH THE COMMENTARY CALLED BHĀṬṬA CHANDRIKĀ,

OF BHĀSKARA,

EDITED WITH NOTES

BY

NDIT SWĀMĪ RĀMA MISRA SĀSTRI.



काश्याम् ।

मेडिकल हाल् नामकमुद्रालये मुद्रयित्वा प्रकाशितः ।

१९४० वैक्रमाब्दे । १८८३ ऐस्वी ।

॥ श्रीः ॥

श्रियै नमः ।

श्रीरत्यै नमः ।

श्रीमते रामानुजाय नमः ।

## संकर्ष-काण्डभूमिका ।

---

अनादिनिधनाविच्छिन्नविविधरचनाप्रपञ्चे सुमेधसामपि पर-
वर्यैरूरे अनर्वाग्दृशामप्यवाङ्मनसगोचरे घटीयन्त्रवदनिशमावर्त-
जगदुदयविभवलयलीले संसारचक्रे बम्भ्रमति कर्मपरवशान्
यतो जन्तूनालोच्य करुणावरुणालयो जगदीश्वरस्तान् बन्धादु-
च्चायितुकामो देहेन्द्रियमनःप्राणैरतिपटीयसा ज्ञानेन्द्रियग्रामेण चा-
जत् । उपदिदेश च कालान्तरीणदेशान्तरीणविप्रकृष्टासंनिकृष्टा-
न्द्रियसृष्टिप्रलयादिलक्षणपरमदुरूहार्थसार्थविज्ञानजननक्षमं शास्त्र-
वेदादिलक्षणं, तद्धि परस्य ब्रह्मणो जननीये जगज्जाते द्यावापृथि-
व्याविव सूर्याचन्द्रमसाविव देवासुरसङ्घाविव स्त्रीपुंसाविव पुण्यपा-
नी इव च निविष्टमपि नियतानुपूर्वीकमिति नित्यमित्याचक्षते
नित्यानित्यविवेकविपश्चितो विचक्षणाः । न च तावतापि तदपरि
ममनाद्यन्तम्यभावमात्मस्वरूपमिवानधिगतसर्वविक्रियं, प्रतिकल्पं
क्षमाणप्राणिकर्मसहानुगेन जगन्नियन्त्रा परमेश्वरेणैव आहितनिज-
शक्तिभिः पूर्वकल्पे तपःसमृद्धिसमाराधितपरमपूरुषैरतीन्द्रियार्थनिरी-
क्षणनिपुणैः परमर्षिभिस्तस्याखिलस्य श्रुतिपदव्यपदेश्यसन्दर्भस्य
स्मर्यमाणत्वात् । न च ते सर्वे वेदा युगपदुद्बभुर्विलिल्यिरे वा किन्तु
कदाचित्काश्चिच्छाखा उत्पसाद प्रादुर्बभूव चापरा, यथा इदानीमेव
कठकपिष्ठलादिशाखा उत्सन्नप्राया अध्येतृविरहाद्ग्रन्थविलोपाच्च ।

एवं सहस्रशाखे सामनि काश्चिदेव शाखा लब्धप्रचारा
शश्च समूलमुन्मूलिताः कालमहिम्ना। प्रचचार चाचिरादेव क
वाजसनेयि-शाखा सब्राह्मणमन्त्रिका,। भगवन्तं भास्करमो
याज्ञवल्क्यो महर्षिस्तां लेभे इति हि पुराणेतिहासाचार्याः। ॥
तावता अचिरप्रवृत्ता सा शाखा न वेदो, नापि कृत्रिमेत्यनि
तस्याः सुचिरकालप्रवृत्तानामाश्वलायनादिशाखानामिव विधूतकल्म
षैरतिस्मरैराधिकारिकैः परमर्षिभिःस्मर्यमाणत्वाविशेषादविशेष
नुपूर्वीनित्यतायाः। यथोक्तं द्वादशस्कन्धे श्रीमद्भागवते—याज्ञवल
स्ततो ब्रह्मन्। छन्दांस्यधिगवेषयन्। गुरोरविद्यमानानि सूपतस्थे
मीश्वरम् ॥ याज्ञवल्क्य उवाच—ओं नमो भगवते आदित्यायेत्या
—यातयाम यजुःकाम उपसरामीति, सूत उवाच—एवं स्तुतः स भ
वान् वाजिरूपधरो हरिः। यजूंष्ययातयामानि मुनयेऽदात्प्रसादतः
यजुर्भिरकरोच्छाखा दश पञ्च तया विभुः। जगृहुर्वाजसन्यस्ताः काण्व
माध्यन्दिनादयः॥ इत्यादिना, इदमेव तु वेदानां नित्यत्वे परमं प्रमा
यद् याज्ञवल्क्यसमानसमया ऋषयस्तत्प्रणीतासु स्मृतिषु पौरुषेयत्व
रूपतां प्रतिपन्नाः। प्रतिपेदिरे च तद्दृष्टेष्वेव मन्त्रब्राह्मणभागेषु अपौरु
षवेदस्वरूपतां, अस्ति ह्येष प्रकृतिकृतो नियमः—प्रायो जना समान
समयमपरमुत्कृष्टं महात्मानमपि लघयितुमिच्छन्ति तदीयास्वाश्चर्ययु
क्तिषु स्वयं विश्वासभाजोऽपि च पुनरीर्ष्यया तथा प्रयतन्ते यथेतर
जनास्तं बहुमानविश्वासभाजनं न जानीयुस्तथा च यदि याज्ञवल्क्यप्र
णीतासु स्मृतिषु तत्प्रोक्तेषु मन्त्रब्राह्मणेषु च तात्कालिकानां पौरुषेयप
न्यान्तरैः समताग्रहो मन्त्रब्राह्मणेषु वा पौरुषेयताग्रहः कथमिवाभ
विष्यत्तथाप्यवार्यैस्तेऽवश्य तेषां समतामवेदरूपतां च, ते च तेषाम
विप्रतिपद्य वेदरूपतामातस्थिरे, तदवश्यमचिरप्रवृत्ता अपि वाजसने

यिशाखा चिरप्रवृत्तशाखान्तराणामिव वेद इति वेदावेदविभागत-
त्त्वज्ञाः ॥

अत एव तु छन्दोब्राह्मणानि च तद्विषयाणि ॥ ४ । २ । ६६ । इति सूत्रे अन्यथाभिधेयस्यानित्यत्वाच्छन्दोब्राह्मणानां तद्वि षयवचनमिति वार्तिककारः, व्याकरणभाष्यकारोऽपि च तत्र तत्र वेदावेदविभागं तथैवातस्थे। अत एव। पुराणप्रोक्तेषु ब्राह्मणकल्पेषु॥ ४ । ३ । १०५ । इति सूत्रे "पुराणप्रोक्तेषु ब्राह्मणकल्पेषु याज्ञवल्क्या-दिभ्यः प्रतिषेधस्तुल्यकालत्वादिति वार्तिकं, पुराणप्रोक्तेषु ब्राह्मणक-ल्पेष्वित्यत्र याज्ञवल्क्यादिभ्यः प्रतिप्रतिषेधो वक्तव्यः । याज्ञवल्क्या-नि ब्राह्मणानि । सौलभानीति । किं कारणम् । तुल्यकालत्वात् ।

एतान्यपि तुल्यकालानीति" । इति वदन्तौ भाष्यवार्तिक-कारौ अचिरप्रवृत्तेषु ब्राह्मणेष्वपि वेदत्वमन्वमंसातामित्यतिस्फुट-मेव । पाणिनिरपि च पुराणप्रोक्तेष्विति वदन् चिराचिरप्रवृत्तत्वलक्षणं ब्राह्मणे विशेषमङ्गीकुर्वाणोऽपि याज्ञवल्क्यप्रोक्तेषु ब्राह्मणेषु ताण्ड-भाल्लविशाट्यायन्यैतरेयिणामिव नाचिरप्रवृत्ततां मेने इति वार्ति-ककारेण तस्याचिरप्रवृत्तत्वबोधनपुरस्सरमयथाभावोऽभिहितः । केचित्तु व्याकरणप्रवेतृमुनित्रयस्यापि याज्ञवल्क्यप्रोक्तेषु ब्राह्मणेष्व-चिरप्रवृत्तत्वमनुमतं, यतः सूत्रकारोऽपि पुराणप्रोक्तेष्विति ब्रूते तत-श्च चिरप्रवृत्तब्राह्मणव्यावृत्त्यर्थमेव पुराणपदमिति,एवमेव काशिका पदमञ्जर्यां हरदत्तोऽपि याज्ञवल्क्यादयो ह्यचिरकालप्रवृत्ता इत्या-ख्यानेषु वार्तेति वदन् सूत्रकारस्येव पुराणपदमुपाददानस्य याज्ञ-वल्क्यप्रोक्तानि ब्राह्मणानि स्वल्पकालप्रादुर्भूतानि अत एव न छन्दि-घृचितानीति मेने । भवतु क्रिमप्येतत्सर्वथाऽपि तु वेदावेदविभा-गोऽयमाजानिकसम्प्रदायसिद्धो वेदनित्यताविद्विषामपि दुरपह्नवस्तथा

हि सर्वज्ञकल्पास्तथागतप्रभृतयः केनापि कारणेन वेदनित्यतापक्षं समूलमुन्मूलयितुमिच्छन्तोऽपि अहमहमिकया तदुपक्रम्य अनेकनिबन्धान्निबध्नन्तोऽपि च न पारयाम्बभूवुस्तेषामिदम्प्रथमताबोधने वा पुरुषविशेषाभिप्रायप्रभवत्वबोधने वा, न चाद्यत्वेऽपि यत्नसहस्रमवलम्ब्यापि शेकुः केचन कालविशेषं पुरुषविशेषं वा निर्देष्टुं येनामुना पुरुषेणायं वेदोऽमुष्मिन् काले प्रणीत इति प्रामाणिकानां श्रद्धेयं स्यात् ।

प्रादुर्भावस्त्वस्माकमप्यनुमतो न हन्तुमीष्टे लेशतोऽपि त्रिवचितां वेदनित्यतां, तथा हि स्मरन्ति—"युगान्तेऽन्तर्हितान् वेदान् सेतिहासान् महर्षयः । लेभिरे तपसा पूर्वमनुज्ञाताः स्वयम्भुवेति", न हि प्रादुर्भावसमये विद्यमानाः परमर्षयस्तन्नित्यतां संशिश्यिरे, । न चर्षीणां सर्वेषामनाश्वास्यतां प्रथयन् कश्चिदाश्वसनीयः, न हि सर्वे लोकमनाश्वास्यज्ञानानोऽभिदधानो वा प्रेक्षावतामपेक्षणीयश्च वा स्यात् व्यवहाराय वा पर्याप्नुयादिति वेदनित्यतापक्षमाक्षिपताऽपि परमर्षिभिः सस्मरिरे वेदा इत्यगत्याऽङ्गीकरणीयमापन्नं, न चेतोऽन्यद्वेदनित्यतावादिनोऽप्यभिमतं नित्यत्वं, यत्प्रतिसर्गं समानानुपूर्वीकतया तपःसम्पत्समृद्धैर्वृद्धैः परमर्षिभिः स्मर्यमाणत्वं, तच्चेद परोऽप्यङ्गीकरोतीति चिरप्रवृत्तवाचास्विवाचिरप्रवृत्तास्वपि वाचासु समानो वेदत्वव्यवहार इति सिद्धान्तसिद्धम् ॥

तथैव श्रुत्याम्नायत्रयीवेदादिपदव्यपदेश्यो ऽपौरुषेयाक्षरराशिरवान्तरानेकभिदाप्रविभिन्नोऽपि प्रथमतो मन्त्रब्राह्मणभेदभिन्नस्तत्रत्यानामेव च क्रियापराणामनिर्णीतार्थवाक्यानां निर्णयाय प्रवृत्तेव षोडशाध्यायी पूर्वमीमांसा ॥

ध्यते । परमिदं द्वादशाध्यायीपर्यन्तमेव मिलति अथ संकर्षकाण्डस्य वार्त्तिकं वर्त्तते न वेति नावधारयितुं पार्यते परं तु शाबरभाष्यं सङ्कर्षकाण्डपर्यन्तं साकल्येन जैमिनीयसूत्रार्थनिरूपणपरं प्राणायि शबरस्वामिभिरिति भाट्टचन्द्रिकाद्वारा सम्यगवगन्तुं शक्यं यतस्तत्र तत्र सङ्कर्षसूत्राणि व्याचक्षाणेन ग्रन्थकृता शाबरं साङ्कर्षभाष्य ग्रन्थतः सद्वाक्यानेकस्थलेषूद्धृतम् ॥

तदेवं संकर्षव्याख्यानमुपलभ्यमानं भाट्टचन्द्रिकैव श्रुतं च शाबरम् । अपरे तु शास्त्रदीपिकानन्तदेवभाट्टकुतूहलप्रभृतयो ग्रन्था न सङ्कर्षान्तमुपलभ्यन्ते किन्तु द्वादशाध्याय्यन्तमेव ।

यद्यपीदं पूर्वमीमांसाशास्त्रं न्यायशास्त्रमिव न युक्तिग्रन्थि-कठिनं सुविस्तारतरं च, नापि वेदान्तशास्त्रमिव प्रतिपदं विप्रतिप-त्तिपदं संशयशतसमुत्थानसंभवमनेकप्रस्थानमथ परस्परतसुकठिनग्र-न्थग्रन्थिलं च, अतः सम्भाव्येतास्य प्रणाशः किन्तु अस्त्येतद् वेदा-ध्ययनसापेक्षं कर्मकाण्डोपजीव्यं चेति कालमहिम्ना वर्णाश्रमधर्मवि-लोपे वर्णाश्रमोपजीव्ये ब्रह्मचर्ये सर्वथा विलोपमुपेयुषि उपजीव्ययोः कर्मकाण्ड-वेदाध्ययनयोर्विलोपेन तस्य प्रणाशो यदद्य प्राचां मीमांस-कानां नामापि नावधारयितुं पार्यते—प्रभाकरगुरूणां तौतातिकानां च न कश्चिद् ग्रन्थ उपलभ्यते केवलं तदीयं मतमुपलब्धेषु ग्रन्थे*षूत्था-पितमिति कथञ्चिदवगम्यते । सोन्दलस्य तु मीमांसकतया नैयायि-कग्रन्थेषु प्रसिद्धस्यापि उपलब्धपूर्वमीमांसाग्रन्थेषु मतोल्लेखोऽपि न विद्यते ॥

---

* तच्छिष्येण शालिकनाथेन शालिकनाथीय वा वा पञ्जिकानाम्ना वा निर्मि-तो पूर्वग्रन्थो मिलति ।

केचित्पुनर्निरर्गलसगरखनिपुणाः कुमारिलमेव तुतातभट्ट मन्यन्ते । तद्यथा

प्रबोधचन्द्रोदयनाटकेऽपि द्वि २ अङ्के श्लोके २ ।

नैवाश्रावि गुरो*र्मतं न विदितं तौ†तातिक‡ दर्शनं तत्त्व ज्ञातमहो न शालिक§गिरां वाचस्पतेः का कथा । सूक्तं नापि महोदधेरधिगतं माहा||व्रती नेक्षिता सूक्ष्मा वस्तुविचारणा नृपशुभिः स्वस्थैः कथं स्थीयते ॥ इत्युक्तम् ।

एतेन टीकोक्तव्याख्यानेन तुतातः कुमारिलभट्ट इति गुरुश्च प्रभाकर इति, शालिकपञ्जिका च प्रभाकरमतावलम्बिना परेषां ग्रन्थ इति स्फुटं सिध्यति । एवं च तातः पितरि पुत्रे चेति प्रकारेण तु.-व्याख्यानास्थितस्तु-शब्दो यस्य तातः अर्थोपदेष्टृतया पितृव्यक्तपस्य तुतातः कुमारिलभट्टस्तदनुयायिनस्तौतातिका इति मन्यन्ते ॥ अयं च पक्षो नास्मभ्यं रोचते यतः कुमारिलभट्टः शाबरे वार्तिकं प्रणिनायेति न तावता तस्य तद्दर्शनमित्याख्यातु यथयम्, अत एव तु इहैव-नैवाश्रावि गुरोर्मतमित्युक्तं न तु दर्शनं, ततश्चाय प्रबोधचन्द्रोदयकारस्य श्रीकृष्णमिश्रस्य तात्पर्यविषयीभूतं तौतातिकं दर्शनमन्यदेवास्ति कौमारिलवार्तिकादिति मन्यामहे अत एव तु सूत्रव्याख्यानप्रणेतृष्वेव शब्दो भवति रामानुजदर्शनं शाङ्करदर्शनं, माध्वदर्शनमिति, न तथा कौमारिलदर्शनमित्यभिद-

---

* प्रभाकरस्य । † कौमारिलस्य ।

‡ यद्यपि प्रबोधचन्द्रोदयस्य मुद्रितपुस्तके माधवाचार्याणां सर्वदर्शनसंग्रहे च तौतातित-शब्द उपलभ्यते तथाऽपि समस्तमनःपाना दर्शनमनयद्य धानकन न वा [illegible] तौतातिक-शब्द पाठस्याप्युपलम्भादयानुगुण्यात्पाश्च एकतौतातिकपदव्युत्पत्तिर्मिथ्या च तुपमधान्नु तत्र तौतातितपदव्युत्पत्ति पाथ पु यदेव कथने तारकादित्यमदनपृथकताऽयं यद्य ॥

§ प्रभाकरमतावलम्बिनाम् । महोदधेर्महभाष्यकारस्य ।

|| पाशुपतमहाव्रतकान् ।

ध्यते, ततश्च तौतातिकं दर्शनं कौमारिलं दर्शनमिति प्रबोधच-
न्द्रोदयटीकायां तौतातिकं दर्शनं कौमारिलमिति प्रयतते न बहु
मन्ये । कथयन्ति च पुरातनमितिहासं—कदाचित्कुमारिलोऽभवदधी-
यानो मीमांसां गुरुगृहे तत्र च कस्यांचित्तदानीमध्याप्यत्वेन प्रचलितायां
जैमिनीयसूत्रव्याख्यायामासीत्पाठः—अत्रापिनोक्तं तत्र तुनोक्तमिति
द्विरुक्तम्—इति, तं च पाठं निरीक्ष्य कुमारिलस्य गुरुर्विसिष्मिये
उत्पन्नं किमिदम्—अत्रापिनोक्तं तत्र तुनोक्तमिति कथं द्विरुच्येत, न हि
द्विरनुक्त्या द्विरुक्तिसंभवः, ततश्च किंचित्कालं सुविचार्यापि नाप निर्णयं
ग्रन्थार्थस्य । सति चैवमुन्मना एव पाठं विसृज्य निर्जगाम गृहाद् गुरुः ।
शिष्यस्तु कुमारिलः, अत्रापिना—अपि—शब्देन अयमर्थ उक्तः, तत्र
तुना—तु—शब्देन उक्त इति द्विरुक्तं इत्येवं रीत्या पदविभागं योजनां
च लिखित्वा गुरुभार्यायै तत्समर्प्य निर्ययौ । गुरुस्तु पुनरुन्मनस्क
एव सायमाययौ गृहं, पत्नी तु पतिमालोक्य श्रान्तचिन्तनश्रमजुषं
लेखमेवार्पयाम्बभूव कुमारिललिखितं पदच्छेदमर्थसमन्वयं च ।

स च *गुरुर्भृशं पिप्रिये शिष्यस्य तादृशीमसाधारणीं व्युत्पत्तिं

---

* पूर्वमीमांसायां गुरुपदेन व्यवहृतः प्रभाकर इति तु शालिकनाथेन स्पष्टं लिख्यते—तथा हि ।

स्वाध्यायविधिवाक्यार्थविचारे प्रथमे मते ।
प्रभाकरगुरोर्दृष्ट्या मीमांसारम्भसिद्धये ॥

इत्यारम्भश्लोकः ।

ऋजुमुखं नाम गुरोराविष्कर्तुं गभीरमपि भावम् ।
शालिकनाथेन कृतं प्रकरणमेतत्प्रसन्नतरम् ॥

एवं च प्रथमप्रकरणान्तश्लोकः ।
द्वितीयप्रकरणस्यादौ च ।

अर्थार्थस्पर्शिताबद्धा यथा शब्दस्य वार्यते ।
प्रभाकरगुरोः शिष्यैस्तथा वक्रो विधीयते ॥

एवं श्लोकः । अत्र च गुरुः प्रभाकर इति न संशयः ।
अत एव गुरु-भट्ट-प्रभाकरा इति पुरुषत्रयतात्पर्येण केषांचिदभिधानमसंगतमेव ।

सरलचित्ततां चावधार्य तेनैतेन तु—शब्दार्थावधारणकौशलेन, गुरु-स्तं कुमारिलं तु—तातम्*वादीदिति श्रद्धोकुमेस्तावदिदं कुमारिल-कौशलं तेन गौरवं गुर्वनुकम्पां च कुमारिले, परं तु नैव तु—तात-भट्टः स तु शबरस्वामिनोऽप्यतिप्राचीन इति पञ्जिकाचिन्तामणि-प्रभृतिग्रन्थव्यासङ्गेन सुज्ञानम् ।

यद्यपि भाट्टदीपिकापदेनैव सङ्कर्षचतुरध्यायी व्याख्यानमपि प्रसिध्यति तथाऽपीयं चतुरध्यायीव्याख्या न भाट्टदीपिका नापि खण्डदेवकृतिः परं तु भाट्टचन्द्रिकाख्या भास्करकृतिश्च । भाट्टदी-पिकाकारात्खण्डदेवादनन्तरं भाट्टचन्द्रिकाकारो गम्भीरनामकब्राह्म-णपुत्रः खण्डदेवकृतिं भाट्टदीपिकां द्वादशाध्यायीव्याख्यास्वरूपां स्वी-यया सङ्कर्षचतुरध्यायीव्याख्यया भाट्टचन्द्रिकाख्यया सयोज्य भाट्ट-चन्द्रिकाख्यामकरोदिति विस्पष्टमस्ति एतद्ग्रन्थान्तिमश्लोकैस्तद्यथा—

> खण्डदेवकृतभाट्टदीपिका लक्षणैः कतिपयैरसम्भृता ।
> इत्युदीक्ष्य बुधभास्करोऽग्निचिद्भारती वरिभराम्बभूव ताम् ॥
> अद्यावधि कृतिरेषाऽद्यन्तविहीनेति दीपिकाख्याऽऽसीत् ।
> षोडशकलाभिरधुना परिपूर्णा भाट्टचन्द्रिकात्वमगात् ॥
> आसीत् षोडशलक्षणी श्रुतिपदा या धर्ममीमांसिका ।
> सङ्कर्षाख्यचतुर्थभागविधुरा कालेन साऽजायत ॥
> गायत्री त्रिपदात्मिकेव विबुधैरद्यापि याप्यठ्यते ।
> तां पूर्णामकरोत्क्रमेण महता गम्भीरजो भास्करः ॥ इति,

* वस्तुतस्तु तुतातभट्टो नाम कश्चनातीव प्रसिद्धः प्राचीनमीमांसक इति गुरुस्तु प्रसादेन तं कुमारिलं तुतातमुवाच चातीरात्मना यथेदानीमपि कश्चन सुप्रौढ पाठ्यते नागाभट्ट मन्यन्ते ।

तस्माद् द्वादशाध्यायीव्याख्या चतुरध्यायीव्याख्या च नैककर्तृका नैकनाम्नी चेति साधु प्रसाधितम् । एतद्व्याख्यानव्यतिरिक्तं सङ्कर्षकाण्डव्याख्यानं नोपलभ्यते केवलं शाबरं सङ्कर्षकाण्डव्याख्यानं ग्रन्थेषूपलभ्यते उद्धाररूपेण, परं तु शाबरं सङ्कर्षव्याख्यानं न केनापि बहुधा ज्ञायते वाऽप्युपलभ्यते वा । मन्ये आधुनिकानां विद्याविद्धुरन्धरविद्वानां देशान्तरीयाणां समाङ्जातीयानामवबोधमानामुद्योगेन विलुप्तप्रायप्रचारमपि साङ्कर्षशाबरव्याख्यानम्—अलवर—जयपुर—जम्मूप्रदेशादिस्थितमहापुस्तकालयेभ्योऽन्वेषणेन लभ्येतेति ।

यतः शाबरसाङ्कर्षव्याख्यानं नातिचिरं विलुप्तप्रचारं भाट्टचन्द्रिकायां तदीयपङ्क्तीनामुद्धारदर्शनात्, अस्ति चायमुद्धारस्तादृशो येनानुमातुं शक्यते यदयं निरीक्षितव्याख्यानेन केनचित्पुरुषेणोद्धृतः पाठ इति । अयं च भाट्टदीपिकाकारः खण्डदेवो जगन्नाथस्य पण्डितराजोपाधेर्मीमांसासु गुरुस्तत्समकाल इति सुनिश्चितं, यतः पण्डितराजः स्वयमाह रसगङ्गाधरे देवादेशाध्यगीष्ट स्मरहरनगरे इति, ।

तस्मात् शाहजहांनाम्नः सुप्रसिद्धसम्राजः प्रेमपात्रं पण्डितराज इति तस्य शाहजहांसमकालता । ततश्च पण्डितराजगुरुणा खण्डदेवेन निर्मितायाः दीपिकायाः पूर्तिस्वरूपा इयं भाट्टचन्द्रिकाऽतिनवीनेति स्पष्टमवगम्यते, तत्काले चेच्छाबरभाष्यपुस्तकं प्रचलितमासीत्तर्हि तत्काललिखितपुस्तकानामेतत्कालपर्यन्तावस्थानस्य सर्वथा सम्भावितत्वेन प्राचीनग्रन्थसमासादनरसिकैः शाबरसाङ्कर्षभाष्यपुस्तकलाभे कृतः समुद्योगोऽवश्यं फलेग्रहिरिति साधु सम्भाव्यते ॥

एतस्याश्चन्द्रिकाख्यव्याख्याया एकं पुस्तकं जडे इत्युपाधिधारिणां श्रीरामचन्द्रशास्त्रिणां पुस्तकालयादवापं द्वितीयं परिव्राजक-

प्रवरतारकाश्रममठस्थपुस्तकागारात्तृतीयं काशीस्थराजकीयप्रधानविद्यामन्दिरपुस्तकागाराच्चैवं पुस्तकत्रयमासाद्यारब्धे मुद्रणे अवधानेन पुस्तकत्रयपाठावलोकने एकमेव त्रिष्वपि पुस्तकेषु मातृकास्वरूपं रामचन्द्रशास्त्रिणः*पुस्तकमवशिष्टे द्वे अपि तत एव लेखिते अतिनूतने अशुद्धिबहुले च इति अतिशयनियततया तदीयलेखपाठादिभङ्गाऽवधार्यात्यन्तं खिन्नमना मुद्रणे नातिपवित्रं सन्दिग्धाक्षरं त्रुटिबहुलं क्वचित् च्युतपाठमेकपुस्तकमपर्याप्तमिति सविशेषमनुस्मृत्य हतप्रायप्रयत्न एवास तथाऽपि काशीस्थेन श्रेष्ठिश्रेष्ठेन श्रीगोविन्ददासगुप्तेन सुमहताऽऽयासेन एकं मद्रासप्रान्तात्सङ्क्षेपशारीरकपुस्तकमानाय्य दत्तं, तदिदं मध्ये द्वित्रस्थलेषु खण्डितपत्रमपि पुस्तकं स्वक्षरं सूत्रवृत्तिविभागवत्, केनचिदधीतं, शोधितं, नातिपवित्रं, प्राप्तमिति बहूपकृतोऽस्म्यस्मिन् मुद्रणकार्ये । ततश्च यत्र मद्रासप्रान्तप्राप्तपुस्तकं विकलं तत्र केषुचित् पत्रेषु एकमात्रेण रामचन्द्रशास्त्रिणां पुस्तकेन मुद्रितपुस्तकमशुद्धं सूत्रमात्रावलम्बेन वृत्तितात्पर्यमवधृत्य, यत्र तु द्वयमपि तत्रोभाभ्यामपि ताभ्यां मुद्रणकार्ये निरवहम् । आशासे च एतस्य मुद्रितपुस्तकस्य प्रचारेणावधृतसङ्क्षेपशारीरकसद्भावाः केचन शास्त्रोन्नयनपरायणाः क्वचिल्लिखितं सङ्क्षेपपुस्तकमुपलभ्य मां कृपयाऽवबोधयेयुश्चेत्तर्हि तदुपसाद्य पुनरपि पाठापपाठाधिकपाठादिनिर्णयं कुर्यामुपस्कुर्यां पुनरपि सङ्क्षेपमुपकुर्यां च जिज्ञासून् अभिमन्येय चात्मानं शास्त्रविघट्टनकृतश्रममिति ।

यद्यपि प्रथमं सङ्क्षेपे टिप्पणीं कर्तुमहं प्रवृत्तस्तदन्वतिप्रममुद्रयं च किञ्चिदादौ तथाऽपि भूयोव्यापारस्य मुद्रणनिर्माणयोर्यौगपद्यम-

* I am grateful to M. M. Gangadhara Śastri of the Sanskrit College Benares, for his kind information as to the existence of the book in the house of P. Ram Chandra Śastri Jare

सम्भावनीयमित्यभिमत्य पुनरुपारमम् । यतिष्ये च पुनर्यथाऽवकाशं तदीयसमापने ।

अस्त्येतदपीह विदुषां विमर्शनीयं यदत्र सङ्कर्षचतुरध्यायीसूत्राणि द्वादशाध्यायीसूत्राणीवयाऽऽल्याताराणि न च वृत्तिविलिखितोऽर्थस्ततोऽवगन्तुमिष्टुं वा यस्य इति परमवैलात्यं, ततश्च सम्भाव्यते कदाचिद् वृत्तिकारेण भास्करेण सूत्रैकदेशा एव प्रतीकतया उद्धृता न तु साकल्येन सूत्राणीति, प्रायो हि विदुषामसकृद् दृष्टचरीयं रीतिर्यत्रैकदेशमुपन्यस्यैव व्याख्यातुमारभन्ते; ततश्च विविधशास्त्रपरिशीलनश्रमजुषो विद्वांसोऽत्र स्वयं परीक्षिष्यन्ते किमेतानि सूत्राणि सकलानि विकलानि वेति । इदमपि चात्रावधेयमस्ति सङ्कर्षकाण्डस्यानां सकलसूत्राणामत्र व्याख्यानमथवाऽधिकरणसूत्राणामेव ।

सर्वे चैतद्विप्रतिपन्नं शाबरसाङ्कर्षोपलम्भेऽनायासेन विवेक्तुं शक्यमिति तदुपलम्भायैवोद्योग आवश्यकः । एवं चैतस्य विप्रतिपन्नत्वमवधार्याधिकरणाद्यनुल्लिख्य विषयसूचनिकास्थाने यथोपलब्धानि सूत्राण्येवालिख्यम् । आशासे च भगवतोयज्ञनारायणस्य प्रसादेन चिरं वैकल्यमुपयातमिदं पूर्वमीमांसाशास्त्रं भाट्टचन्द्रिकोपेतसाङ्कर्षोपलम्भेन वैकल्यं जहदपि शाबरोपलम्भेन सर्वथा साङ्गं स्यादिति । अस्मिं श्चात्र कृतावधानो यदि कश्चन विद्वान् इहत्यो ऽथवा देशान्तरीयः शाबरसाङ्कर्षमुपलभेत मामनुगृह्य सन्दिशेत्तर्हि सर्वसाधारण्येन तत्प्रकाशं कुर्यामिति शम् ।

| | |
|---|---|
| आश्विनकृष्ण-प्रतिपदि-भौमे । सं. १९५० । | सत्सम्प्रदायाचार्यः पण्डितस्वामिश्रीराममिश्रशास्त्री, वाराणसीनिवासनिबद्धप्रवृद्धसमादरः । काश्यां दशाश्वमेधे आगस्त्यमुन्याश्रमाश्रमः । |

श्रीमते रामानुजाय नमः ।

# सङ्कर्षकाण्डस्थसूत्रसूचनिकापत्रम् ।

## जैमिनीये सङ्कर्षे त्रयोदशाध्यायस्य प्रथमः पादः ।



## अथ त्रयोदशाध्याये द्वितीयः पादः ।



## अथ त्रयोदशाध्याये तृतीयः पादः ।

## अथ त्रयोदशाध्याये चतुर्थः पादः ।

### अयं च यूपपाद इत्युच्यते ।



## अथ चतुर्दशाध्यायस्य प्रथमः पादः ।

### अथमिष्टकापादः ।



* विकर्षीति पाठः ४२ पृष्ठे मुद्रितः प्रामादिकः विकर्षीत्येव तु युक्तः । कृष्णयजुःसंहितायाः पञ्चमाष्टके तृतीयप्रपाठके पङ्क्तिकर्षी उपदधातीति पाठोपलम्भादस्यसूत्रस्य चयने विधीयमानेष्टकोपधानविधायकतया विकर्षीति पाठस्य तत्प्रकरणपठितत्वेनायमेव वैदिकः पाठो युक्ततर इति प्रतीमि ।

अथ चतुर्दशाध्याये द्वितीयः पादः ।

अयमवदानपादः ।



अथ चतुर्दशाध्याये तृतीयः पादः ।

अथ प्रैषपादः ।



अथ चतुर्दशाध्याये चतुर्थः पादः ।

अयं च होमपादः ।

अथ पञ्चदशाध्याये प्रथमः पादः ।

अयं कालपाद इत्युच्यते ।



अथ पञ्चदशाध्याये द्वितीयः पादः ।

अयमग्निपाद इत्युच्यते ।



* वषट् ते इति तु पुस्तकान्तरे सूत्रपाठः ।

† स्वाहेत्यालेपन इति पाठोऽपि पुस्तकान्तरस्थः ।

अथ पञ्चदशाध्याये तृतीयः पादः

अयं च यज्ञपादो इत्युच्यते ।



अथ पञ्चदशाध्याये चतुर्थः पादः ।

अयं आर्षेयपादो वरणपादो वा ।

## अथ षोडशाध्याये प्रथमः पादः ।

### होत्रकाध्याये सामिधेनीपादः ।



## अथ षोडशाध्याये द्वितीयः पादः ।

### निगदपादोऽयम् ।



## अथ षोडशाध्याये तृतीयः पादः ।

### वषट्कारपादोऽयम् ।

## अथ षोडशाध्याये चतुर्थः पादः ।



नमः पूर्वाचार्येभ्यः ।

समाप्तञ्च पूर्वमीमांसाशास्त्रम् ॥



श्रीमते रामानुजाय नमः ।

# शुद्धाशुद्धिसूचीपत्रम् ।

| अशुद्धम् । | शुद्धम् । | पृष्ठे । | पङ्क्तौ । |
|---|---|---|---|
| याथे | याथे | ६ | १२ |
| त्वय | त्वैव | ६ | १६ |
| नाहेति | नार्हति | ६ | ४ |
| यस्या | यस्या | १० | ७ |
| यनु | यन्नु | ११ | ७ |
| सोम्भुवा | सोव म्भुवा | २४ | १७ |
| पाम्न | पाम्ने | ३७ | १३ |
| प्रक्रान्तार | प्रक्रान्ता | ३८ | ८ |
| दाघामि | दाधामि | ३६ | ७ |
| दत्ताादि | दत्तादि | ४० | १ |
| हित | हित | ४४ | १४ |
| पत्तेः | पत्तो | ४६ | २५ |
| पूर्वपाप | पूर्वपाप | ४७ | १८ |
| मिध्य | मिध्य | ४८ | १० |
| हन्ता | हन्तां | ५५ | २ |
| स्यस्या | स्यस्या | ५६ | ८ |
| स्यास्वे | स्यस्वे | ५६ | १६ |
| यस्य | यस्य | ६२ | २ |
| देवतास्त्या | देवत्या | ६४ | १६ |
| सोमसुत्या | सोमसुत्या | | |
| पयोप्रयो | प्रयो | ७१ | ८ |
| स्यामेप्या | सामेप्या | ७१ | २१ |
| पं पाम्न | पे पाम्न | ७२ | १६ |
| अनिष्टापयपयस्य | अनिष्टापय यस्य | ७२ | १८ |
| मभिम | मभिमं प | ८० | ११ |
| वैराजास्य | वैराजस्य | ८६ | ७ |
| स्योर्वेदो | स्योर्वेदे | ६४ | १ |
| कस्य | कस्य | ६५ | २ |
| यो | यो | ६५ | २ |
| म प्रियां | प्रियिकां | १०८ | १४ |
| वाहनस्य | वाहनस्य | १०६ | ८ |
| शूद्रस्यति | शूद्रस्येति | ११३ | १४ |
| वोढाय | वोढ्य | १२२ | ३ |
| मिवाद्दनं | मिवायाद्दनं | १२५ | १४ |
| स्वाद्व | स्वाच्च | १२५ | १५ |
| धात | धात | १२५ | २३ |



॥ श्रियै नमः ॥

श्रीपतये नमः ।

श्रीमते रामानुजाय नमः ।

प्रणम्य जैमिनिमुनिं खण्डदेवस्तथाविह

अनुग्रहाय मन्दानां सङ्ग्रहोऽयं विधीयते ॥ १ ॥

अथ पूर्वमीमांसाया अवशिष्टा संकर्षण-संकर्ष*काण्ड-पदद्वयव्यपदिष्टा
चतुरध्यायी भाट्टदीपिकानामकव्याख्यासंवलिता आरभ्यते।

ॐ अविघ्नमस्तु ॥ एवं द्वादशभिरध्यायैः प्रकृतिविकृतिभेदेन कति-
पयान् न्यायान् संशोध्य तैरेव न्यायैरितस्ततो विप्रकीर्णान्वेदवाक्यार्थो-
नैदम्पर्येण सम्यग् निष्कृष्य निर्णेतुमेषा चतुरध्याय्यारभ्यते। अत एव
संकर्षे न प्रत्यधिकरणं सङ्गत्यपेक्षा ॥

## सू० अनुयजतीति ॥ १ ॥

ज्योतिष्टोमे सोमस्याग्ने। वीहीत्यनुयजतीति श्रुते वाक्ये सोमया-
गोत्तरैयेन मन्त्रविधिः। इति-शब्देन करणत्वस्यानु-शब्देन पश्चाद्भाविनः
कार्यस्य चोक्तिः। यागोत्तरमनुमन्त्रणं वा विधीयत इति प्राप्ते यजिश्रु-
त्योपस्थितस्य यागान्तरस्यैव सोमयागोत्तरकालविशिष्टस्य विधिः। तस्मा-
दनुवषट्कृतं देवतानां तृप्त्या इति तृप्त्यर्थतावादस्यान्यथाऽनुपपत्तेः ॥

---

* यथा चैतस्याः संकर्षण-संकर्ष-काण्डपदेन व्यवहारस्तथा निरणैषाम शास्त्र-
दीपिकाभूमिकायाम्। श्रीभाष्ये तृतीयाध्याये तृतीयपादे प्रदानाधिकरणे श्रीभाष्यकाराः
"तदुक्तं सांकर्षणे 'नाना वा देवतापृथक्त्वा'दि' ति सूत्रमुद्धरन्तः संकर्षकाण्ड सकर्षण
काण्डपदेनापि व्यवहरन्तीत्युभयथाऽपि व्यवहारः। यद्यपि शाङ्करभाष्यादिषु नाना वा
देवता पृथग् ज्ञानादिति पाठ उपलभ्यते, उपलभ्यते चानन्दज्ञानादिकृतभाष्यव्याख्या
नेऽपि तथा पाठसमादरः, तथाऽपि श्रीभाष्यस्थं नाना वा देवतापृथक्त्वादिति, शाङ्कर
भाष्यस्थं नाना वा पृथग् ज्ञानादिति चार्थकथनमात्रं न तु सूत्रानुपूर्वीनिर्देशः सङ्कर्षे
देवताकाण्डे चतुर्दशाध्याये तृतीयपादे "तथा पृथक्" इति, "नाना वा इति च पृथक्-
सूत्रद्वयानुपूर्वीदर्शनात्। तदिदमये चतुर्दशे स्फुटमिति नेह बहु प्रपञ्च्यते इति ॥

† यद्यपि संकर्षचतुरध्यायी अवतरणाभिर्भिर्व्याख्याता तथाऽपि न तद्भाष्यमु
पलब्धुमीश्महे इति साम्प्रतमतिकष्टेन प्राप्तमिदमेव प्रकाशयामः।

## सू० स द्रोणकल*शात् ॥ २ ॥

सोऽयमनुवषट्कारो†द्रोणकलशस्थद्रव्येण यष्टव्यः, तस्य ध्रौ‡वाज्यवत् सर्वार्थत्वात् द्रोणकलश प्रकृत्येषा वा §एतेषां योनिरिति श्रुतेः । न सर्वं जुहोतीति वचनलब्धस्य सोमयागद्रव्यशेषस्य भक्षणार्थतयाऽप्युपपत्तेरिति प्राप्ते भवत्वनुवषट्कारस्यापि पूर्वोक्तशेष एव द्रव्यम् । तस्या वा यया यदनुवषट्कारः तस्याभव इति पूर्वद्रव्यसमापकत्वश्रुत्यविरोधात् स उ एव सोमस्य स्विष्टकृद्भाग इति श्रुत्याऽनुयागस्य स्विष्टकृद्भागत्वेन प्रतिपत्तित्वावश्यम्भावाच्च, एतेन साविते नानुवषट्करोति न भक्षयतीत्यपि लिङ्गमुपपन्नम् ॥

## सू० तन्त्रं प्रदानम् ॥ ३ ॥

तस्यार्थवादसहकृतमन्त्रवर्णसमर्पिताग्निस्विष्टकृद्देवताकतया दार्शपौर्णमासिकस्विष्टकृद्वदेव तन्त्रेणानुष्ठानमिति प्राप्तेऽनु-शब्देन तत्तदभ्यासोत्तरकालविधानेन तस्य चाव्यवहितस्यैव स्वरसतः प्रतीतेरावृत्तिः । न च पृषदाज्यवत्पात्रान्तरे स्थापनम् । एकदेवद्रव्यकत्वेनाप्रयोजकत्वात् । एतेन द्विदेवत्यर्तुग्रहादिष्वनुवषट्कारनिषेधोऽप्युपपन्नः । एवमेव भक्षाणामप्यावृत्तिरुपपादनीया ॥

## सू० शामित्रं तीर्त्वा ॥ ४ ॥

वाजपेये प्राजापत्यानुपाकृत्य तान्पर्यग्निकृतानुत्सृजते ब्रह्मसाम्न्याऽऽलभत इति श्रुतयोः ||पर्यग्निकरणसं¶ज्ञपनयोर्मध्यवर्त्तिपदार्थ. *शामित्रदेशं

---

* लोके कलश-शब्दस्य दन्त्योपधत्वेऽपि वेदे तालव्योपधपाठ एव साम्प्रदायिकः । शुक्लयजुःसंहितायां एकोनविंशाध्याये २७ मन्त्रे वायव्यैर्वायव्यान्याप्नोति सतेन द्रोणकलशमिति तालव्योपधपाठदर्शनात् ॥

† जुहूसदृशे महापुष्करे द्वे पात्रे ते द्रोणकलशपदवाच्ये ॥

‡ ध्रुवानामकपात्रस्थेनाज्येनेत्यर्थः ॥

§ तैत्तिरीयसंहितायां तृतीयकाण्डे द्वितीयप्रपाठके द्वितीयानुवाके द्रोणकलश आधवनीय इति ॥

|| दक्षिणावामसमन्तात्प्रादक्षिण्येनोल्मुकस्य परिभ्रमणं पर्यग्निकरणमित्युच्यते ॥

¶ उपाकरणानन्तरं प्रतीचीनाग्रमुदीचीनपादं पशुं धारयित्वा शमितारः संज्ञपयन्ति श्वासरोधेन पशोर्मारणं संज्ञपनमित्युच्यते ॥

* आग्नीध्र आहवनीयसमीपे उल्मुकं निधाय यथाऽऽगतेन पुनः पर्येति तदनन्तरं प्रतिप्रस्थाता उपवेषेण पुरः पशार्द्धत्वादुदीचोऽङ्गारान्निरूहति स शामित्रो धर्मा

प्रति प्रापण, स च क्रतुपशुभि. सह *प्रातःसवन एव कार्यं । अधिगुप्रैषस्य तदानीमेव वक्तव्यत्वात् । अन्यथा प्रैषस्यावृत्त्यापत्ते. । निष्ठाप्रत्ययोक्त स्योत्सर्जनपूर्वत्वस्य व्यवधानेऽपि भुक्त्वाऽऽगत इत्यादाविवाविरोधात् । यूपादुन्मोचनमेव वोत्सर्गपदार्थ इति कार्ष्णाजिनेर्मतेन प्राप्ते यूपादुन्मोचनादिप्राणवियोगान्तव्यापारस्यैकपदार्थत्वात्संज्ञपनकरणकभावनाया सेतिकर्तव्यताकाया एवालम्भविधिनोत्कर्षादुत्सृजतिस्तद्व्यापारोपक्रम-मनुवदतीति क्त्वा-प्रत्ययोक्तमव्यवहितपूर्वत्व न बाधनीयम् । अधिगोरप्या-वृत्तिर्मनो ‡ तादेरिव युक्तेवेत्युक्तम् ॥

---

स्तौति मन्त्रेण सावित्र दक्षिणया द्वारा दक्षिणेन विहारं प्रपद्य यजमानमग्रपानामन्तरत आहरन् स्वयं पश्चिमेनैत्य दक्षिणमुत्तरेण चात्वालोत्करावुदगत्वा शामित्रप्रदेशाय निदधाति अयं निहितोऽग्निः शामित्र इत्युच्यते । यश्च उद्धारमसिवत् स्वयं दक्षिणहस्ते धारयन् स्कन्दयेद्वा उत्तराभिमुखस्तिष्ठति अध्वर्युणा आश्रवणे कृते अस्तु-श्रौषडित्युपर्यपदं मध्याज्वारणकपक्षत्याश्रावण करोति स आग्नीध्र इति अग्नीदिति चोच्यते ।

* अध्वर्युः अग्निर्मूर्धा दिव इत्यनयाऽऽहुतिं हुत्वा इन्द्राहुतौ व्याहृतीश्च हुत्वाऽऽप्रयाशस्तु प्रसुहि । तेन उपस्तस्युक्ते मते यथा प्रकृते ते सर्पन्ति समिष्ठन्ते प्रातःसवनम् अथ प्रातःसवनमित्यारभ्यैतदन्तं कर्म प्रातःसवनमित्युच्यते ॥

† अधिगुप्रैषार्थो मैत्रावरुणप्रैषोऽभिहितः स च होताऽधिगुमन्त्रात् । दैव्याः शमितार' इति । अधिगुप्रैषमन्त्रस्तु । दैव्याः शमितार उत मनुष्या आरभध्वम् । उपनयत मेध्या दुरः । प्रयावदस्य मेधपतये तमाशस्त अन्त । अत्र शमितारः-विशसनकर्तारः ते च द्विविधा दैवका मनुष्यरूपाश्च ते यत्र सम्बोध्यन्ते हे दैव्याः शमितारः । अपि च हे मनुष्याः शमितारः यूयमुभयेऽपि पशुमारणं कर्म कर्तुमारभध्वम् इत्यर्थ इति साम्प्रदायिकाः ।

‡ मनसा उता रक्षिता सर्वदेवे प्राधिता देवता "मनोता" इति तैत्तिरीयब्राह्मणभाष्ये सायणाचार्यः तत्रैव मनोता-"अग्निर्मनोतेत्युच्यते अग्निर्वै देवानां मनोतेति" श्रुतः तैत्तिरीयब्राह्मणे तृतीयकाण्डे षष्ठप्रपाठके दशमानुवाके । "त्वं ह्यग्ने प्रथमो मनोतेति श्रुतश्च तैत्तिरीयसंहितायां च षष्ठकाण्डे तृतीयप्रपाठके नवमानुवाके प्रयोगः आलब्धस्य मनोपक्रामति मनोतायै हविषोऽवदीयमानस्यानुब्रूहीति ॥

ऐतरेयब्राह्मणस्य द्वितीयपञ्चिकाया प्रथमाध्याये दशमखण्डे मनोतायै हविषोऽवदीयमानस्यानुब्रूहीत्याहाध्वर्युः त्वं ह्यग्ने प्रथमो मनोतेति सूक्तमन्वाह तदाहुर्यदन्यदेवत्य उत पशुर्भवत्यथ कस्मादाग्नेयीरेव मनोतायै हविषोऽवदीयमानस्यान्वाहेति तिस्रो वै देवानां मनोतास्तासु हि तेषां मनांस्योतानि वाग्वै देवानां मनोता तस्यां हि तेषां मनांस्योतानि गौर्वै देवानां मनोता तस्मिन् हि तेषां मनांस्योतान्यग्निर्वै देवानां मनोता तस्मिन् हि तेषां मनांस्योतान्यग्निः सर्वा मनोता अग्नौ मनोताः सङ्गच्छन्ते तस्मादाग्नेयीरेव मनोतायै हविषोऽवदीयमानस्यान्वाहेति ।

## सू० क्रत्वङ्गं वा ॥ ५ ॥

अ*ग्निं चित्वा सौत्रा†मण्या यजेतेति संयोगस्य कालार्थत्वाभावात्स्थण्डिलरूपद्रव्यार्थत्वमाराडुपकारकाणामपि पवमानहविषां द्रव्याङ्गत्वदर्शनात् ।

श्येनचितिं चिन्वीत ‡स्वर्गकाम इति फलार्थायाश्चितिक्रियाया आकाङ्क्षया तदङ्गत्वमेव वेति प्राप्ते सन्निपातिनोः स्थण्डिलचयनयोराराडुपकारकानाकाङ्क्षतया तत्संयोगात्क्रतुस्तदाख्य इति न्यायेन साग्निचित्यक्रतेरिव चिनोत्यर्थत्वात्क्रत्वङ्गं सौत्रामणी वैमृधवत्क्रतोरनन्तरमेवानुष्ठेया ॥

## सू० चयनाङ्गं वा ॥ ६ ॥

§रुद्रो वा एष यदग्निस्तस्य तिस्रः शरव्याः प्रतीची तिरश्च्यनूची ताभ्यो वा एष आवृश्च्यते योऽग्निं चिनुतेऽग्निं चित्वा तिसृ‖धन्वमयाचितं ब्राह्मणाय दद्यात्ताभ्य एव नमस्करोत्यथो ताभ्य एवात्मानं निष्क्रीणीते इति श्रुतं तिसृधन्वदानमपि पूर्वन्यायेन क्रत्वङ्गमिति प्राप्ते स्थण्डिलस्यैव रुद्रत्वात्तदीयशरव्याभिरग्निचित आव्रश्चनमेतद्दानेन ताभ्य आ-

---

* तैत्तिरीयसंहितायाः पञ्चमकाण्डे षष्ठप्रपाठके तृतीयानुवाके ।

† सप्तमीहविर्यज्ञसंस्था पशुप्रधाना सौत्रामणीशब्देनोच्यते सा द्विविधा एका कौकिली अपरा चरका अग्निं चित्वा सौत्रामण्या यजेतेत्यादावङ्गत्वेन पूर्वमाया चरकैव ।

‡ शाखान्तरे तु सुवर्गकाम इति पठन्ति ।

§ तैत्तिरीयसंहितायाः पञ्चमकाण्डे पञ्चमप्रपाठके सप्तमानुवाके धनुर्दानप्रकरणे "रुद्रो वा एष–इत्यारभ्य आत्मानं निष्क्रीणीते" इत्यन्तो मन्त्रः तदर्थस्तु योऽयमग्निः स एष रुद्रः क्रूरदेवः ।"रुद्रो वै क्रूरः" । ६ । २ । ३ । इति ह्यन्यत्राम्नातम् । तस्य च क्रूरस्य तिस्रः शरव्याः शरेषु साध्व्यः प्रत्यञ्च तिस्रः शरव्या । यद्वा हिंसकत्वादिषुरेव शरव्या सा च त्रेधा प्रतीची सम्मुखमागच्छन्ती, तिरश्ची पार्श्वयोर्गच्छन्ती अनूची पृष्ठत आगच्छन्ती चेति । एष इति योऽग्निं चिनुते स एव ताभ्य इषुभ्यो निमित्तभूताभ्य आवृश्च्यते सर्वतः छिद्यते ताभिः प्रहृतो भवतीत्यर्थः । अतस्तत्परिहाराय तिसृभिरिषुभिर्युक्तमेकं धनुः अयाचितमपि ब्राह्मणाय दद्यात् तेन दानेन शाधिकाभ्यः ताभ्य इषुभ्यो नमस्करोत्येव, । अपि च ताभ्य इषुभ्यः सकाशादेव आत्मानं स्वशरीरं निष्क्रीणीते ।

‖ तैत्तिरीयसंहितायाः पञ्चमकाण्डे पञ्चमप्रपाठके सप्तमानुवाके, तिसृधन्वमयाचितमिति यजुः, तैत्तिरीयसंहितायाः प्रथमकाण्डेऽष्टमप्रपाठके एकान्नविंशानुवाके "तिसृधन्वर्दं शुष्कदृतिर्दक्षिणा" तदीयब्राह्मणे च "तिसृधन्वं शुष्कदृतिर्दक्षिणा समृद्ध्यै, । तिसृभिरिषुभिर्युक्तं धनुस्तिसृधन्वं तत्क्षेपाय निर्मिता शुष्कदृतिस्तदुभयत्र देयमिति माधवाचार्याः ।

त्मनो निष्क्रयवादश्चास्य क्रियाङ्गत्व एवोपपद्यते । न च सन्निपातिनोऽङ्गस्याङ्गान्तरं विप्रतिषिद्धं रथन्तराङ्गस्य वरदानस्य दर्शनात् ॥

## सू० योऽग्निम् ॥ ७ ॥

यो*ऽग्नि चिनुयात्तं दक्षिणाभीराधयेदित्याम्नातं दक्षिणाभीराधनमपि वरदानवच्चयनाङ्गमिति प्राप्ते दक्षिणाया श्रुतिस्त्वेनानत्यर्थत्वात्तस्याश्च प्रयोगप्रयुक्तत्वाद् दृष्टार्थत्वाच्च क्रतोरेवाङ्गम् ॥

## सू० गुणचोदना वा ॥ ८ ॥

प्रकृतितः प्राप्तदक्षिणात एता दक्षिणा भिन्ना एव विधीयन्त इति धेन्वेव प्राकृतीनां बाध इति प्राप्ते राधनस्य प्रीत्युत्पादनरूपत्वाद्गुणविधिरेवायं कल्पसूत्रमूलभूतश्रुतावधिकदक्षिणाविधानादुभयसमुच्चये सिद्धे याऽधिका दक्षिणा सा यथा प्रीतिजनिका स्यात्तादृशी देयेत्यर्थः ॥

## सू० उल्मुकहरणे ॥ ९ ॥

वेदे पशावग्निना पुरस्तादेति रक्षसामपहत्या इति श्रुतं पशोः शामित्रदेशनयनकाले वपानयनकाले चोल्मुकस्य नयनं प्रत्याहरणं च तद्वाजपेये प्राजापत्यानां क्रतुपशूनां च कालभेदेन प्रचारादावर्तेत, उभयेषामपि राक्षसापहननस्यावश्यकत्वादिति प्राप्ते रक्षोऽपहननश्रुतेरर्थवादत्वेन श्रपणार्थताया एवोचितत्वात्कालान्तर आनीतस्यापि श्रपणार्थत्वानपायात्तन्त्रम् ॥

## सू० अभितः ॥ १० ॥

स्वाहा† देवेभ्योदेवेभ्यः स्वाहेत्यभितो वपां जुहोति पुन‡रूर्जा,स-

---

* तैत्तिरीयसंहितायाः पञ्चमकाण्डे पष्ठप्रपाठके अष्टमानुवाके ।

† तैत्तिरीयसंहितायास्तृतीयाष्टके प्रथमप्रपाठके पञ्चमानुवाके तृतीयम् पदले, स्वाहा देवेभ्य इत्यादि ॥

‡ "पुनरूर्जा सहरय्येत्यभितः पुरोडाशं माहुती जुहोति" तैत्तिरीयसंहितायाः प्रथमाष्टके ।

दरय्येत्यभितः *पुरोडाशमाहुती जुहोतीत्यादावभितोऽर्थं निधेहीत्यादा-
विव देशवादः, अभित इत्यस्य प्रतिसम्बन्धिनि पदे द्वितीयाविधानाद्यथा
वपा पुरोडाशस्य मध्यतोभवति तथा जुहुयादित्यर्थं इति प्राप्ते कर्मण
एव पूर्वं प्रक्रान्ततया वपापदस्य तद्द्रव्यकयागपरत्वात्तत्पूर्वापरकालवादो-
ऽय, न च लक्षणा दोषः । "अभितश्च" इति सूत्रेणैव तदनुमतेः । किञ्च
अभितःपदस्योभयत इत्यर्थकस्य देशवादे कतरयोर्दिशोर्ग्रहणम् । अनियमे
विकल्पापत्तिः । कालवादे तु पूर्वापरयोर्द्वयोरेवोपस्थितेर्न क्षतिः । अत
एव देवेभ्यः स्वाहेत्युपरिष्टादिति श्रुत्यन्तरे व्यक्तः कालवादः ॥

## सू० हविष्कृत् ॥ ११ ॥

हविष्कृदेहीति मन्त्रे हविष्कृत्पदेनाध्वर्युरुच्यते । हविष्करणस्या-
ध्वर्यवत्वात् मन्त्रस्तु परेण प्रयोज्यः । प्रैषेषु च पराधिकारात् । वाग्दे-
व्येव वा हविष्कर्त्री । वाग्वै हविष्कृद्वाचमेव तदाह्वयतीति वाक्यशेषात् ।
न चैतत्पक्षे आज्यौषधसान्नाय्यानामविशेषेण देवी कर्म्मोपपद्यत इति
वाच्यम् । पशुपुरोडाशे हविष्कृता वाचं विसृज्य पशुं विशास्तीति श्रवणे-
नौषधमात्रहविःकर्तृत्वावगतेः । आज्यनिर्वापस्य पूर्वं वृत्तत्वेन तदर्थमाहू-
ताया वाग्देव्याः पुनराह्वानाभावेन वाग्विसर्गे हविष्कृत्पदकालिकत्वविध्य-
नुपपत्तेः । न च शास्त्रान्त्याधिकरणन्यायेन प्रैषावृत्तिः । एतत्पक्षे पैवस्या-
दृष्टार्थत्वेन प्रयाजानामिव प्रसङ्गोपपत्तेः । तस्मादौषधहविष्कृद्वाग्देव्येवेति
प्राप्ते पत्न्येव हविष्कृदुपोत्तिष्ठति देवानृषीन्पितॄन्त्साभिद्रुत्या वदन्तीति
वाक्यशेषात् दृष्टार्थत्वाच्च वाचो हविष्कृत्त्वमर्थवादमात्रम् ॥

## सू० नयने ॥ १२ ॥

च†मसाध्वर्यूणामिव प्रचरणाभावाद्धविर्नृ–पदेन यौगिकवृत्त्या-
एतावन्तमाधारो यः कश्चिदभिधीयत इति स्थितं तृतीये । न च अभि-

---

* मध्यतोऽवधेन शिरस्य पिष्टपिण्डस्य चतुर्थन्तदेवतानामपूर्वकार्यमिति पदा-
न्तेन मन्त्रेण अभिघर्मनामन्तरकूर्मपृष्ठाकारे कृत्वे पुराडाशवदवार्यं तत् । "यथापस्य
मध्यतोऽभितश्च" इत्युत्तरकर्मप्रकृतिं कूर्मस्येव प्रकृतिं चतुरश्रमार्दं करोति ।

चतुर्गो नुष्टुष्ट्या अनुष्टुप्कृति न चापुच्छवर्तिनोऽथ किं तु पशाय पूर्वस्य
प्रकृतिरिव भवति तथा करोति ।

† तैत्तिरीयब्राह्मणभाष्ये तृतीयकाण्डे द्वादशप्रपाठके नवमानुवाके चमसैदो
नाट चमसाध्वर्यव इति सायनाचार्यः ।

तारोवहद्यः कार्यः । शमितारो नयन्तीति विधेः शमितार उपेतनेत्यादिमन्त्रेष्वपि बहुवचनदर्शनादिति प्राप्ते शमितुरेकत्वेऽप्यन्येषामपि पशुना सह शामित्रदेशगमनदर्शनाच्छमितृसाहित्यमात्रेण सर्वेषां शमितार इति निर्देशः । विनिपद्योद्गातार इत्यनुद्गातृसाहित्येन प्रयोगदर्शनात् ॥

## सू० मनुष्याः ॥ १३ ॥

ते सह गन्तारो ये केचन भवेयुः । दैव्याः शमितार आरभध्वमुत मनुष्या इति मन्त्रे तु ऋत्विग्भूतदेवप्राये पाठेनोपसंहारादिति प्राप्ते ऋत्विज एव स्युः । तेषामुल्मुकनयनादिविहितकर्मार्थं गमनस्य क्लृप्तत्वात् । कर्मासंबद्धेषु तत्कल्पने मानाभावात् ॥

## सू० शमिताऽन्यः ॥ १४ ॥

दैव्याः शमितार इत्यारभ्य शमितारो यदत्र सुकृतं कृणवतेत्यन्तं यावन्तः पदार्थाः कर्तृत्वेन कीर्तितास्ते सर्वे गमनक्रियान्तर्भूता एव । तद्बहिर्भूता अपि सामर्थ्यलक्षणात्तद्गतमतिकानिवारणादयोऽपि तथा । तानेनात् श्रौतानार्याश्च पदार्थानेकः सह गन्तृभ्योऽन्यः शमितैव कुर्यात् । उन्नीयभक्तिगानमुद्गातेवेति प्राप्ते श्रौतानेव स कुर्यात् । आध्वर्यवसमाख्याते वेदे समाम्नातानामध्वर्योरेव कर्तृत्वावश्यभावात् । आर्येषु त्वनियमः । न च पराङावर्तते ऽध्वर्युरिति वचनविरोधः । तस्य प्रथमाध्वर्युपरत्वात् । इतरमन्यस्तेषामिति न्यायेनाध्वर्युगणस्यान्यतमस्य शमितृत्वेऽपि समारोपपत्तेः ॥

## सू० संज्ञपने च ॥ १५ ॥

हिंसारूपे सज्ञपने न हिंस्यादिति निषेधेनान्यः सौनिक एव कर्ता स्यादिति प्राप्ते वातं प्राणमन्ववसृजतादित्यादिमन्त्रैस्तस्यापि गमनान्तर्भावात्तदंशे समाख्यायाधायोगात्तत्राप्यध्वर्युगणस्य एव कर्ता स्वधिते मैनं हिंसीस्तस्मात्क्रत्ववधोऽवध इत्यादिलिङ्गदर्शनेनास्य पापजनकत्वाभावात् । भाष्ये तु चतुरधिकरणीयमेकीकृत्य व्याख्याता । लिङ्गदर्शनाच्चेति परमसूत्रं तु सर्वसाधारणमेव यतं इषिः शमितरिति प्रैषे सति अन-

मिति त्रि प्रत्याहेति लिङ्गश्रमनश्रयणयोः समानकर्तृकतां बोधयतीति व्याख्यातम् । अपणस्य प्रकृतावध्वर्युकर्तृकत्वादिनिश्चयादिति तद्वाशय । परं त्वेवं न्यायः सोमान्तर्गतपशुष्वेव । वपायागेऽध्वर्युप्रतिप्रस्थात्रोर्व्यापृतत्वेऽपि तृतीयस्याध्वर्योः सत्त्वात् । आवपाहोमाद्वपोद्धरणबिलस्य पापिनाच्छादनस्य शमितृकर्तृकत्वाम्नाननिर्णोद्धात् । निरूढादिषु त्वनायत्त्याऽन्य शूद्रादिः शमिता स्यात् । अत एवाधे च वैकर्तस्य क्लोमा च शमितुस्तद् ब्राह्मणाय दद्याद्यद्यब्राह्मणः स्यादिति लिङ्गात्स्वत्रपनसूत्रेऽन्यपदानुकर्षण तावन्मात्रे त्वन्य एव कर्तेति सुव्याख्य याज्ञिकाद्यविरोधाय ॥

इति सकर्प भाट्टदीपिकायां त्रयोदशाध्यायस्य प्रथमः पादः ॥१॥

## अथ त्रयोदशेऽध्याये द्वितीयः पादः ।

### सू० पत्नीम् ॥ १ ॥

पत्नीं सन्नह्याज्येनोदेहीत्यध्वर्युकर्तृकप्रैषे पत्नी-शब्दस्य प्रतिमन्त्रन्निवेशमपेक्ष्य स्वार्थापरस्याप्रकृत्वे*नाशीर्वा एष आत्मनो यत पत्नीत्याम्नानाद्गुम्नत्योरेकाकारकापन च हकर्मसु पत्न्येव निपुणा मदपेक्षयेति लौकिकवाक्य इव वक्तुर्भार्याया इव बोधादध्वर्युभार्याया एव सन्नहनम् । आस्यफलस्यावेत्स्तूपकारकत्वसम्भवादिति प्राप्ते सन्नहनी पत्नी सुकृतेन गच्छतामिति मन्त्रवर्णाद्यजमानपत्न्या एव फलभोक्तृत्वादध्वर्युकर्तृकेऽपि तस्मिन्पत्नीपदेन यजमानाया एव बोधदर्शनात्तस्या एव संस्कारः । †यस्य पत्नी त्वन्यनालम्भुका भवति तामपरुध्य यजतेति लिङ्गाच्च । अध्वर्युभार्यापराधस्य स्वभार्यमिहुत्यन पुनर्विधानायोगात् ॥

* तैत्तिरीयसंहितायां षष्ठकाण्डे प्रथमप्रपाठके षष्ठानुवाके षडायस्य द्वि-

† तैत्तिरीयब्राह्मणे तृतीयकाण्डे सप्तमप्रपाठके नवमानुवाके यस्य पत्न्यादित्यादि' इत्याद्यनुष्ठाने यस्य यजमानस्य पत्नी अनालम्भुका स्याद् यागाय अयोग्या भवति तस्यादोषस्य परिहाराय कथं सक्ता भागा' प्रोक्त-विनश्यति दम्पती हि कर्मणः कर्तारौ तत्र स्त्रियाः कर्मायोग्यत्वादहरहर्वा तदानीं हानिपरिहाराय तां स्त्रियम् अपरुध्य च दूरे स्थाप्य अपरुध्य बहिरन्तर्गदितयाद्गुणं मन्त्रेण स्तोत्या यजेत इति मनि विद्याहृदयभाष्य शाब्दार्थार्थोऽर्थ ॥

## सू० एवं वा ॥ २ ॥

पत्न्याः संनहनेन अन्तौ* सा कुर्यादिति विधावेकत्वस्योपादेयविशे-षणत्वेन विवक्षितत्वादौदुम्बरीसंमानवदेकस्यामपि विधेश्चरितार्थ्यादे-कैव या काचिद्यजमानपत्नी संनह्येति प्राप्ते सर्वासामपि संनहनादिसं-स्काराः कर्त्तव्याः । कर्तृत्वाविशेषात् । फलाधानांशप्रयुक्तत्वेन सन्निपाति-त्वाच्च । ग्रहवत्संस्कार्यस्याविशेषेण संख्याया अविवक्षितत्वाच्च । पत्नी-प्रातिपदिकस्य यज्ञस्वामिमात्रवाचित्वाच्च ॥

## सू० भूयांसि कर्माणि ॥ ३ ॥

ऐन्द्राग्नाः षड् यागाः काम्या †याज्यानुवाक्यायुगले तु द्वे एवाम्नाते तत्राद्यं युगलमाद्यस्य कर्मणोऽङ्गं निर्विवादम् । अन्यत्तु युगलं पञ्चाना-मपि कर्मणामङ्गम् । युगलद्वयं वा पुनः पुनरावर्त्य त्रिरनुवाकपाठे तदन्तर्ग-तमन्त्राणामिव दण्डकलितवद्विषमाणामेकं समानामन्यदङ्गमिति प्राप्ते समं स्यादिति न्यायेनाङ्गिनामङ्गयोश्च विभागे सत्याद्यत्रयस्याद्यमन्त्यत्र-यस्यान्त्यमङ्गमिति स्वस्थानविवृद्धिः ॥

## सू० भूयांसो मन्त्राः ॥ ४ ॥

दर्शपूर्णमासयोः पुरोडाशपिण्डविभागे यथाभागं व्यावर्त्तेथां भगो वां विभजत्वित्यादयो बहवो मन्त्रा आम्नाताः । ते सर्वेऽपि समुच्चित्य विभजनेऽङ्गानि अन्यतमग्रहणे विनिगमनाविरहात् । एकस्य विनियोगे अन्यस्याकाङ्क्षाया अशान्तेः ॥ अनेकेषामङ्गिनामेकस्मिन्नङ्गे समुच्चयवद्वैप-रीत्यस्यापि न्यायतौल्येन सिद्धेरिति प्राप्ते कृतस्य प्रकाशनस्य पुनः करणास-म्भवान्मन्त्राकाङ्क्षायाश्च विकल्पेन विनियोगेऽपि शान्तेस्तां चतुर्भिरादत्त इत्यादिलिङ्गाच्च विकल्पेन विनियोगः ॥

## सू० ऐन्द्रम् ॥ ५ ॥

‡सांनाय्य प्रकृत्य श्रूयते । न§ दारुपात्रेण दुह्यादग्निवद्धि दारुपात्रं

---

* कृतोऽपकुर्यादिति पा० ।

† पुरः पूर्वम् यागाद्देवतामनुकूलयितुं या अनुच्यते इति व्युत्पत्त्या पुरोनुवाक्यापदमनुवाक्यापदं च ऋग्विशेषबोधकम् ।

‡ तैत्तिरीयसंहितायां द्वितीयकाण्डे पञ्चमप्रपाठके तृतीयानुवाके सांनाय्य

यद्दारुपात्रेण दुह्याद्यातयाम्ना हविषा यजेताथो खल्वाहुः पुरोडाशमुखानि वै हवींषि नेत इतः पुरोडाश हविषो यामोस्तीति काममेव दारुपात्रेण दुह्यादिति, अत्राग्नेयपुरोडाशोऽग्निदेवत्यः दारुणोऽन्तराले. सत्त्वेन दाह-सन्तुपयसोऽप्यग्निसम्बन्धानपायादनूचीनावाग्नेयावेव यागौ सपदौ । तस्य जामितापादकत्वात्तत्परिजिहीर्षया पुरोडाशमुखानि वा इति वाक्येनाग्ने-यसान्नाय्ययोर्मध्ये यागान्तरं पुरोडाशद्रव्यमुपांशु याजशब्दैर्विधीयते । तस्यापि पयोद्रव्यकत्वे उक्तरीत्याऽग्निसम्बन्धाज्जामितातादवस्थ्यापत्त्या तदनुक्तिः । तुल्यन्यायेन मध्यस्थयागस्याग्निदेवताकत्वेऽपि जामितानपायात्तदितरदेव-ताकत्वे सिद्धे इन्द्राय त्वा जुष्टं *प्रोक्षामीति प्रकरणाम्नातमन्त्रानुत्कर्षा-येन्द्र एव देवतेति नियम्यते । सप्रतिपक्षदैवताकत्वाच्च सान्नाय्येन सहास्य प्रयानम् । आग्नेयोऽष्टाकपाल इति वाक्य एव विधिकल्पनाऽपि न दुष्यतीति बोधायनकल्पानुगुणे पूर्वपक्षे प्राप्ते—सिद्धान्तस्तु जातेष्टिया-ज्य इवोपक्रमोपसंहारयोर्दारुपात्रकरणकदोहकीर्तनादेकवाक्यत्वम् । तच्च च दोहोद्देशेन दारुपात्रमेव विधीयते । दारुपात्रे च दोषसद्भावादयुक्त-तामिवाशङ्क्याथो खल्वित्यादिना तदभाव समर्थ्य काममिति निगमन वाक्ये विधेः स्पष्ट प्रतीतेः । एवं सति मध्ये यागान्तरविधाने वाक्य भेदः स्यादेव आग्नेयवाक्ये देवतासङ्गितादिना द्रव्यदेवतासम्बन्धप्रती

---

ष्टर्निर्वचनं दर्शितं मन्त्रस्तु 'इन्द्रस्य वृत्रं जघुषइन्द्रियं वीर्यं पृथिवीमनुव्यार्च्छत्तदोष धयो वीरुधोऽभवन्स प्रजापतिमुपाधावद्वृत्रं मे जघुषइन्द्रियं वीर्यं पृथिवीमनुव्यार्च्छ दोषधयो वीरुधोऽभूवन्निति स प्रजापतिः पशूनब्रवीदेतदस्मै समनयतेति तत्पशवओषधी भ्योऽध्यात्मन्त्समनयन्तत्प्रत्यदुहन् यत्समनयन् तत्सान्नाय्यस्य सान्नाय्यत्व' इति । वृत्र जघुषो इतवत ध्यार्च्छत् विविधत्वेन प्राप्नोत् । ओषधिवीरुधयोर्भेदः पूर्वाचार्यैर्दर्शित

[illegible]

दीरे सम्यक् स्थापितवन्तः पुनः स्वनिष्ठं तद्वीर्य क्षीरादिरूपमिन्द्रं प्रति दुग्धवन्तः । यस्मात्पशवः समनयन् तस्मात्सान्नाय्यनाम भवतीति सायणाचार्याः । किञ्च दधिपयसो च 'पाय्यसान्नाय्येति' सूत्रेण निपातनात्कमप्युत्पत्त्या सान्नाय्य पदाभिधेये ।

‡ तैत्तिरीयब्राह्मण तृतीयकाण्ड द्वितीयप्रपाठके द्वितीयानुवाके

* सशूकायामग्निहोत्रहवण्या तिरःपवित्रमप आनीय त्रिरुत्पूय उन्नयनयुप स्थापयतेन जलेन सर्वाणि यज्ञपात्राणि दक्षिणपाणिना सेचनं पुरोडाशीयानां पत्नु तत्प्रोक्षणमित्युच्यते ।

त्याऽऽमिक्षावाक्य इव यागकल्पनसम्भवेऽपि द्रव्यमात्रश्रवणेन कथं तत्कल्पना । आग्नेययागस्य स्पष्टमकीर्त्तनात्कथमनूचीनताऽवगमः । उपांशुयाजे यदन्वञ्चौ पुरोडाशावन्तरा यजतीत्यादिपदश्रवणाद्वैषम्यम् । अनुत्कर्षमात्रलिप्सया देवताकल्पने पूषादिदेवताः कुतो न नियम्यन्ते । पूषानुमन्त्रणमन्त्रादेरनुत्कर्षसम्भवात् । यागान्तरकल्पनाग्रहे वा इत इतः पुरोडाशपदेनोभयतः पुरोडाशवत उपांशुयाजस्यैव परामर्शः कुतो न कृतः । बहुवचनाश्रवणेनैकवाक्यत्वसम्भवात् । तस्मादर्थवादवाक्येऽग्निस्पृष्टदाहसंबन्धमात्रेण दोषमाशङ्क्यायातयामरूपपुरोडाशस्य प्रथमं सत्त्वात्तदुत्तरक्रियमाणं सर्वमयातयाममेवेति परिहृत्य पश्चाद्द्वारपात्रं विधीयत इत्येव युक्तमिति ॥

## सू० समानतन्त्रः ॥ ६ ॥

पौर्णमास्यङ्गभूतो वैमृधयागस्तया समानतन्त्र एव कार्यो न तत्पश्चात् । *"वैमृधः पूर्णमासेऽनुनिर्वाप्यो भवति तेन पूर्णमासः सेन्द्र ऐन्द्र दध्यमावास्यायां तेनामावास्या सेन्द्रेति सान्नाय्येन" तुल्यवच्छ्रुते । संस्थाप्येति क्त्वाश्रुतिरनुनिर्वपतीत्यनु–शब्दश्चानुवषट्कारयागादाविव प्रधानयागोत्तरकालाभिप्रायेणाप्युपपद्यत इति प्राप्ते स वै पौर्णमासेन हविषेष्ट्वाऽनुनिर्वाप्य इति वचनान्तरे पौर्णमासेनेति तृतीयानिर्देशेन‡ साङ्गप्रधानकरणकभावनानिर्देशेन प्रयोगोत्तरकालप्रतीतेः संस्था–शब्दस्यापि प्रयोगसमाप्तिपरत्वात्तत्र यच्छक्नुयात्तद्दद्यादिति दक्षिणाभेददर्शनाच्च भिन्नतन्त्र एव । तुल्यता त्विन्द्रवत्त्वमात्रेणाप्युपपद्यते ॥

## सू० स नित्यः ॥ ७ ॥

* पौर्णमास्यामनुनिर्वाप्यं वैमृधं विधातु प्रस्तौति । 'इन्द्रं वृत्रं जघ्निवांसं मृधोऽभिप्रावेपन्त स एतं वैमृधं पूर्णमासेऽनुनिर्वाप्यमपश्यत्तन्निरवपत्तेन वै स मृधोऽपाहत" इति । इन्द्रो वृत्रं हतवान् तमिन्द्रं मृधो वृत्रपक्षपातिनो वैरिणोऽभितः समागत्य प्रकर्षेण भयमुत्पादयितुमकम्पयन्त । विनाशिता मृधो वैरिणो येन देवेनासौ विमृत् । स देवो यस्यैकादशकपालस्य पुरोडाशस्य सोऽयं वैमृधः । तं पुरोडाशं पूर्णमासयागेऽनुनिर्वाप्य प्रधानकर्मणः पश्चात् निर्वापयेत्यमपकर्षादिति तैत्तिरीयसंहितायां द्वितीयकाण्डे पञ्चमप्रपाठके तृतीयानुवाके सायनाचार्याः ।

† तैत्तिरीयसंहितायां द्वितीयकाण्डे पञ्चमप्रपाठके चतुर्थानुवाके

‡ तृतीयया साङ्गप्रधान करणकभावनानिर्देशेनेति पाठान्तरम् ।

न वैमृधो निमित्तोपबन्ध*मात्रेण श्रुतत्वान्नित्य इति प्राप्ते यदग्रे निरुप्य नानुनिर्वपेदित्यादिना निन्दार्थवाददर्शनात्पारम्पर्यस्यापरित्यागवचनबलाद् यद्येतानालभेत वायव्यस्यैव शिर उपदध्यादिति वचनात्पुरुषशीर्षोपधानस्येवानित्यस्तत्प्रश्नः ॥

## सू० अग्र-शब्दः ॥ ८ ॥

- यदग्रे निरुप्येत्यस्य पौर्णमासीप्रकरणे पाठादग्र-शब्देनाधानाव्यवहितोत्तरपौर्णमास्येव ग्राह्येति प्राप्ते अग्रे कृत्वा नेदानीं कुरुत इत्यादावकरणपूर्वकालमात्रप्रत्यायकस्याग्र-शब्दस्य पौर्णमासीविशेषपरत्वे लक्षणाप्रसंगे निरुप्येति वाक्यस्य प्रकरणाद्बलीयस्त्वाद्यस्याः कस्याश्चित्पौर्णमास्यामुपक्रम्य नोत्स्रष्टव्यम् । याज्ञिकास्तु वैमृधो नित्य एव । ऐकतन्त्र्यभिन्नतन्त्रत्वयोः परं विकल्पः ॥ एतयोर्मध्ये प्रथमपौर्णमास्यामिच्छया यः पक्षः परिगृहीतस्तमेव पक्ष यावज्जीवमवलम्बेतेत्याहुः ॥

## सू० न द्वे ॥ ९ ॥

दर्शप्रकरणे ऽभ्युदितेष्टौ श्रूयते । †"न द्वे यजेत यत्पूर्वया सम्प्रतियजेतोत्तरयाऽछम्बट् कुर्याद्यदुत्तरया सम्प्रति यजेत पूर्वयाऽछम्बट् कुर्यान्नेष्टिर्भवति न यज्ञस्तदनुह्रीतमुग्धोऽपगल्भो जायत एकामेव यजेत प्रगल्भोऽस्य जायते नादृत्य तद् द्वे एव यजेतेति" । यद्यपि यागद्वयपक्षे पौर्वापर्यानवधारणादिदोषसद्भावादेकयागपक्षस्यैव प्रगल्भता, तथाऽपि न पक्ष प्रगल्भतरत्वाभावादनादृत्य यागद्वयमेव कुर्यादित्यर्थः । तदिदं यागद्वयमभ्युदितेष्टिर्दर्शेष्टिश्च । सप्यायाः सन्निहितपरामर्शित्वात् । दर्शस्य प्रकरणात्सन्निधिनाऽभ्युदितेष्टेश्चोपस्थितत्वात् । वस्तुतस्तु अस्मिन्नेव प्रकरणे याज्यान्तरे द्वे पौर्णमास्यौ द्वे अमावास्ये यजेत यः कामयेत चक्षुयामि-

---

* निमित्तोपबन्धमन्तरेणेति पा० ।

† तैत्तिरीयसंहितायां द्वितीयकाण्डे पञ्चमप्रपाठके पञ्चमानुवाके ।

‡ छंबट् इत्यस्य प्रयोगश्चापि यथा श्रीमद्भागवते तृतीयस्कन्धेऽष्टादशाध्याये षड्विंशे श्लोके "एषा घोरतमा सन्ध्या लोकच्छम्बट्करी प्रभो । उपसर्पति सर्वात्मन् सुराणां जयमावह" इत्यत्र लोकच्छम्बट्करीत्यस्य लोकनाशकरीत्यर्थः ।

तीति श्रुतस्य द्विरभ्यासस्य विधायकमेतद्वचनम् । अन्यथा विकृतिप्रकृत्योरकालोपक्रमपर्वावच्छिन्नजीवननिमित्तयोर्विहितत्वेन निमित्तानन्तरमेव कर्तव्यतया ज्ञातत्वेन सम्प्रति कतरत्कर्तव्यमित्यार्थशाब्दिकः संशयोपन्यासो न समञ्जसः स्यात् । अभ्यासपर्वेऽमावास्यापौर्णमास्योर्मध्ये कतरा प्रथममभ्यसनीयेति सन्देहस्तु युज्यते । तस्माद् द्विरिज्यावाद इति प्राप्ते ऋद्धिकामपदाश्रवणादभ्युदितेष्टेरेवायं वादः, अर्द्धं हविरातञ्चनाय निदध्यादिति विधानाल्लिङ्गादेव दर्शेष्टिरपि प्राप्तैवेति चेत् सत्यम्, अभ्युदितेष्टेर्देवतामात्रविकारेऽपि दर्शत्वानपायात्कोऽदित कर्म कृतमेवेति पुनर्न किमपि कार्यमित्यातञ्चनार्थमर्द्धं हविः स्थापनं व्यर्थमित्याशङ्काऽपनिनोदयिषया तच्छेषोऽयं वादः । एकामेव यजेत न द्वे इत्याद्युक्तः पक्ष स्तुत्वाऽनूद्य दूषयति । यत्पूर्वयेति । सम्प्रति कृतेयमिष्टिर्यदि पूर्वा दर्शेष्टिरेव तदाऽस्या अकालोपक्रान्तत्वात्प्रायश्चित्तेष्टिलोपः । यदि चेयमुत्तरा प्रायश्चित्तेष्टिरेव तदा परदिने पर्वणि कर्तव्याया अप्यकरणाच्छम्बट्कारः । अतो द्वयोः कर्मणोर्भेदादवश्यम्भावादेकामेव न द्वे इति पक्षमनादृत्य द्वे एव यजेत न केवलामभ्युदितेष्टिमिति पक्षस्यैवाश्रयणीयत्वादर्द्धमातञ्चनाय निदध्यादित्यर्थवादार्थः ॥

## सू० यत् पितृभ्यः ॥ १० ॥

*अमावास्यायां पिण्डपितृयज्ञोत्तरमेव दर्शेष्टिस्तत्र प्रक्रान्तव्यम् ।

---

* तैत्तिरीयसंहितायां द्वितीयकाण्डे पञ्चमप्रपाठके तृतीयानुवाके "इन्द्रो वृत्रं हत्वा परां परावतमगच्छदपाराधमिति मन्यमानस्तं देवताः प्रैषमैच्छन्सोऽब्रवीत्प्रजापतिर्यः प्रथमोऽनुविन्दति तस्य प्रथमं भागधेयमिति तं पितरोऽन्वविन्दन् तस्मात्पितृभ्यः पूर्वेद्युः क्रियत इति तदर्थस्तु वृत्रवधेनापराधमपराधं कृतवानस्मीति मन्यमान इन्द्रो भीतः स्वयमेव दूरमगच्छत् । तमिन्द्रं प्रति देवता आह्वानमैच्छन् । देवानां मध्ये योऽन्विष्य प्रथममिन्द्रं लभते तस्य प्रथमं भागो दीयत इति प्रजापतिना उक्ताः पितरः प्रथममिन्द्रं लब्धवन्तः तस्मात्पितृभ्यः पूर्वेद्युः पिण्डपितृयज्ञं कुर्यात् दर्शयागदेवतानाममावास्यायामारम्भः प्रतिपदि यजनम् । पितृणां त्वमावास्यायामेव पिण्डदानं । ननु तैत्तिरीयब्राह्मणे तृतीयप्रपाठके दशमानुवाके । "इन्द्रो वृत्रं हत्वा । असुरान्पराभाव्य पितृभ्य एव यज्ञं निष्क्रीय यजमानं प्रतनुते इत्येते मन्त्राः । तदर्थस्तु । इन्द्रः पुनर्युद्धे वृत्रं हत्वा महासुरानपि पराभूतानकृत्वा यदमावास्यायां पर्वदिने प्रति स्मयत् ममागत्य

